अजमपि जनियोगं प्रापदैश्वर्ययोगादगति च गतिमत्तां प्रापदेकं ह्यनेकम्।
विविधविषयधर्मग्राहिमुग्धेक्षणानां प्रणतभयविहन्तृ ब्रह्म यत्तन्नतोऽस्मि॥ १॥
प्रज्ञावैशाखवेधक्षुभितजलनिधेर्वेदनाम्नोऽन्तरस्थं
भूतान्यालोक्य मग्नान्यविरतजननग्राहघोरे समुद्रे।
कारुण्यादुद्दधारामृतमिदममरैर्दुर्लभं भूतहेतो–

अव्यवहार्यमिति।' परमार्थतो व्यवहारागोचरत्वेऽपि परमार्थतत्त्वस्य मायाशक्तिमनुसृत्य व्यवहारगोचरतां परिकल्प्य नमस्कारक्रिया तस्मिन्प्रयोजनवशाद्राश्रितेत्यर्थः॥ १००॥

इदानीं भाष्याकारोऽपि भाष्यपरिसमाप्तौ शास्त्रप्रतिपादितपरदेवतातत्त्वमनुस्मृत्य तन्नमस्काररूपं मङ्गलाचरणमाचरति–अजमपीति। यद्ब्रह्माशेषोपनिषत्प्रसिद्धं सर्वथा परिच्छेदरहितं तदहं प्रत्यग्भूतं नमस्ये(नतोऽस्मि) तद्विषयं प्रह्वीभावं करोमीति सम्बन्धः। प्रणामप्रयोजनमाह–प्रणतेति। ये हि प्रणता ब्रह्मणि प्रकटीभूतास्तन्निष्ठास्तिष्ठन्ति तेषां यदविद्या तत्कार्यात्मके भयं तदाचार्योपदेशजनितबुद्धिवृत्तिफलकारूढं ब्रह्मैव हन्ति। न खलु जडाबुद्धिवृत्तिर्वस्तुसामर्थ्यमन्तरेणाज्ञानं सकार्यमपनेतुमलम्। बुद्धीद्धो बोधो बोधेद्धा वा बुद्धिरुक्तं फलमादधातीत्यर्थः। तस्यैव ब्रह्मणः सम्प्रति तटस्थलक्षणं विवक्षति–अजमित्यादिना। यद्यपि जन्मादिसर्वविक्रियाशून्यं वस्तुतो ब्रह्म कूटस्थमास्थीयते तथाऽपि तदैश्वर्येण तदीयशक्त्यात्मकेनानिर्वाच्याज्ञानवैभवेन योगादाकाशादिकार्यात्मना जन्मसम्बन्धं प्राप्य जगतो निदानमिति व्यपदेशभाग्भवति। तथा च श्रुतिसूत्रयोर्ब्रह्मणो जगत्कारणत्वं प्रसिद्धमित्यर्थः। यद्यपि चेदं ब्रह्म कूटस्थतया विभुतया च गतिवर्जितमवतिष्ठते तथाऽपि यथोक्ताज्ञानमाहात्म्यात्कार्यब्रह्मतां प्राप्य गतिमत्तां गन्तव्यतां बादर्यधिकरणन्यायेन प्रतिपद्यते तदाह–अगति चेति। यद्यपि चेदं ब्रह्म वस्तुतो निरस्तसमस्तनानात्वमेकरसंमद्वितीयमुपनिषद्भिरभ्युपगम्यते तथाऽपि जीवो जगदीश्वरश्चेत्येतद्यदनाद्यनिर्वाच्याविद्यावशादनेकमिव प्रतिभातीत्याह–एकमिति। केषां दृष्ट्या पुनरनेकत्वं ब्रह्मणोऽवगम्यते तदाह–विविधेति। विविधाश्च ते विषयधर्माश्च तद्ग्राहितया मुग्धं विपर्यस्तं विवेकविकलमीक्षणं येषां तेषां दृष्ट्या ब्रह्मणोऽनेकत्वधीर्न तु तत्त्वतः। शान्तदृष्ट्या तु तस्मिन्नेकत्वमेव प्रामाणिकमित्यर्थः॥ १॥

सम्प्रति ग्रन्थप्रणयनप्रयोजनप्रदर्शनपूर्वकं परमगुरूनागमशास्त्रस्य व्याख्यातस्य प्रणेतृत्वेन व्यवस्थितान्प्रणमति–प्रज्ञेति। यो हि कारुण्यादिदं ज्ञानाख्यममृतं भूतहेतोस्तदुपकारार्थमुद्दधार तं परमगुरुं नतोऽस्मीति सम्बन्धः। अमुमिति तस्य पुरोदेशे सन्निहितत्वेनापरोक्षत्वं सूचितम्। परमगुरुत्वं पूज्याना-

